# સંસ્કૃત સુભાષિતો

સંગ્રહ કરનાર

નૃસિંહપ્રસાદ કાલિદાસ ભટ્ટ



શ્રી દક્ષિણામૂર્તિ વિદ્યાર્થીભવન

ભાવનગર

૦—૧—૦

પ્રકાશક:
નૃસિંહપ્રસાદ કાલિદાસ ભટ્ટ
શ્રી દક્ષિણામૂર્તિ વિદ્યાર્થીભવન
ભાવનગર

સંવત ૧૯૭૯

મુદ્રક:
રામદાસ મોહનદાસ ગાંધી
નવજીવન મુદ્રણાલય
અમદાવાદ

# પ્રસ્તાવના

આ સુભાષિતો શ્રી દક્ષિણામૂર્તિ વિનયમંદિરના પ્રથમ વર્ષના વિદ્યાર્થીઓ માટે પસંદ કરવામાં આવ્યાં છે.

વિદ્યાર્થીઓ સંસ્કૃત ભાષાનો રીતસર અભ્યાસ શરૂ કરે તે પહેલાં આવાં સુભાષિતો દ્વારા તેમની જીભ સંસ્કારી થઈ જાય અને ભાષાની હલકને તેઓ અનાયાસે પકડી લે એ આ પસંદગીનો મુખ્ય ઉદ્દેશ છે.

સુભાષિતોને અમુક વિચારોના ક્રમમાં ગોઠવ્યાં છે, પરન્તુ જે ક્રમમાં મુકયાં છે તે જ ક્રમમાં તેમને શીખવવાં જોઇયે એવો આગ્રહ નથી. શિક્ષક પોતાના વિદ્યાર્થીઓની સ્થિતિનો વિચાર કરી પોતાનો નવો ક્રમ રચી શકે. સહેલા અઘરા ઉચ્ચારણની દૃષ્ટિથી યા તો છન્દના ઓછાવત્તા આકર્ષણની દૃષ્ટિથી પોતાને ફાવે તે ક્રમમાં તેમને ગોઠવી શકે છે.

આપણા ગુજરાત કાઠિયાવાડનું સંસ્કૃત ભાષાનું ઉચ્ચારણ સામાન્યતઃ બહુ દોષવાળું છે. એટલે શિક્ષકે આ

સુભાષિતો શીખવતી વખતે સંસ્કૃત ઉચ્ચારણના નાના મોટા ભેદોનો ખાસ ખ્યાલ રાખવો જોઇશે—જેમકે હ્રસ્વદીર્ઘના ઉચ્ચારો, જોડાક્ષરોના ઉચ્ચારો, વિસર્ગના ઉચ્ચાર, પદાન્ત શબ્દના ઉચ્ચાર વગેરે. ઉપરાંત શિક્ષક આ સુભાષિતોને સંસ્કારી ઢબથી ગાઈ શકે તો જ તેની મઝા છે.

વિદ્યાર્થીઓને આ સુભાષિતોના અર્થો શીખવવાનો ખાસ ઉદ્દેશ તો નથી જ. છતાં કેટલાંએક સુભાષિતોના અર્થો તો આપોઆપ જ ફૂટી નીકળે એવા છે, તેમાં શિક્ષક સહેજ ઈસારો કરી ખસી જાય તો વાંધો નથી.

અગાઉ વિદ્યાલયના પ્રથમ તેમજ દ્વિતીય વર્ષના અમરકોષના શ્લોકો તથા સુભાષિતો એ બન્નેનો સમાવેશ કર્યો હતો. અમરકોષનો આવો ઉપયોગ નકામો જણાયાથી અમે તેને કાઢી નાખ્યો છે અને બન્ને વર્ષનાં સુભાષિતો એક જ વર્ષને માટે રાખ્યાં છે. આજ સુધી સંસ્કૃતનું રીતસર શિક્ષણ ત્રીજા વર્ષથી શરૂ થતું તે હવે બીજા વર્ષથી શરૂ થશે—બેશક, સ્હેલા સ્વરૂપમાં.

નાનાભાઈ

# सुभाषितो

मूकं करोति वाचालं पंगुं लंघयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानंदमाधवम् ॥ १ ॥

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानंदं कृष्णं वन्दे जगद्गुरुम् ॥ २ ॥

निधये सर्वविद्यानां भिषजे भवरोगिणाम् ।
गुरवे सर्वलोकानां दक्षिणामूर्तये नमः ॥ ३ ॥

गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४ ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभि र्ध्यानगम्यम्
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ५ ॥

नास्ति विद्यासमो बन्धु नास्ति विद्यासमः सुहृत् ।
नास्ति विद्यासमं वित्तं नास्ति विद्यासमं सुखम् ॥ ६ ॥

न चोरचोर्यं न च राजहार्यं
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं
विद्याधनं सर्वधनप्रधानम् ॥ ७ ॥

विद्या विवादाय धनं मदाय, शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतत् ज्ञानाय दानाय च रक्षणाय ॥ ८ ॥

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयो ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुन र्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचि र्बिम्बोद्ग्राहे मणि र्न मृदां चयः ॥ ९ ॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव काऽपि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या
विद्यावतां सकलमेव चरित्रमन्यत् ॥ १० ॥

नास्ति सत्यसमो बन्धु र्नास्ति सत्यसमः सुहृत् ।
नास्ति सत्यसमः सूनु र्नास्ति सत्यसम सुखम्ः ॥ ११ ॥

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वायवो वान्ति सत्ये सर्वं प्रतिष्ठितम् ॥ १२ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ १३ ॥

गोभि र्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धै र्दानशूरैश्च सप्तभि र्धार्यते मही ॥ १४ ॥

सत्यान्नास्ति परो धर्मः सत्यान्नास्ति परं तपः ।
सत्यान्नास्ति परो योगः सत्यान्नास्ति परं पदम् ॥ १६ ॥

रविश्चन्द्रो घना वृक्षा नद्यो गावश्च सज्जनाः ।
एते परोपकाराय विरिञ्चेन विनिर्मिताः ॥ १६ ॥

परोपकाराय फलन्ति वृक्षाः
परोपकाराय वहन्ति नद्यः ।

परोपकाराय दुहन्ति गावः
परोपकारार्थमिदं शरीरम् ॥ १७ ॥

परोपकारकैवल्ये तोलयित्वा जनार्दनः ।
उपकारं गुरुं ज्ञात्वा ह्यवतारान् दशाग्रहीत् ॥ १८ ॥

यो नात्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च बन्धुवर्गे ।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुंक्ते ॥ १९ ॥

श्रूयतां धर्मसर्वस्वं यदुक्तं शास्त्रकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ २० ॥

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ २१ ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ २२ ॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
त्रिभुवनमुपकारश्रेणिभिः पूरयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ २३ ॥

यथा चित्तं तथा वाचा यथा वाचा तथा क्रिया ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ २४ ॥

गंगा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ॥ २५ ॥

चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः ।
चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ॥ २६ ॥

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ २७ ॥

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ २८ ॥

क्षारं जलं वारिमुचः पिबन्ति
तदेव कृत्वा मधुरं वमन्ति ।
सन्तस्तथा दुर्जनदुर्वचांसि
पीत्वा च सूक्तानि समुद्गिरन्ति ॥ २९ ॥

स्वभावं न जहात्येव साधुरापद्गतोपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ ३० ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हसि ॥ ३१ ॥

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ ३२ ॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभंगेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।

१०२२



विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ३३ ॥

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतयः ॥ ३४ ॥

दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय ।
परोपकाराय वचांसि यस्य वन्द्य स्त्रिलोकीतिलकः स एकः ॥

निरपेक्षं मुनिं शान्तं वीतरागं गतव्यथम् ।
अनुव्रजाम्यहं नित्यं पूयेयमंघ्रिरेणुभिः ॥ ३६ ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चंदनं न वने वने ॥ ३७ ॥

यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ३८ ॥

अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥ ३९ ॥

चलं वित्तं चलं चित्तं चले जीवितयौवने ।
चलाचलमिदं सर्वं धर्म एको हि निश्चलः ॥ ४० ॥

भार्या मित्रं गृहस्थानां विद्या मित्रं प्रवासिनाम् ।
रोगिणामौषधं मित्रं धर्मो मित्रं शरीरिणाम् ॥ ४१ ॥

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ ४२ ॥

वाग्वेगो मनसो वेगो निंदावेगस्तथैव च ।
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ॥ ४३ ॥

सुमहान्त्यपि शास्त्राणि धारयंति बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यंतीहाल्पबुद्धयः ॥ ४४ ॥

ऊर्ध्वबाहु र्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ४५ ॥

धीराणां भूषणं विद्या मंत्रिणां भूषणं नृपः ।
भूषणं च पतिः स्त्रीणां शीलं सर्वस्य भूषणम् ॥ ४६ ॥

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं भूषणे किं प्रयोजनम् ॥ ४७ ॥

कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमारूपं तपस्विनाम् ॥ ४८ ॥

उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ ४९ ॥

दानेन तुल्यो निधिरस्ति नान्यः
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
संतोषतुल्यं धनमस्ति नान्यत् ॥ ५० ॥

मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् ।
लोभाविष्टो नरो हन्ति स्वामिनं वा स्वपोषकम् ॥ ५१ ॥

लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ ५२ ॥

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ५३ ॥

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ ५४ ॥

यथा शरीरं किल जीवितेन
विनाकृतं काष्ठमिवावभाति ।
तथैव तज्जीवितमप्यवैमि ।
लोकोत्तरेण स्फुरितेन शून्यम् ॥ ५५ ॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ५६ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ५७ ॥

मणिना वलयं वलयेन मणिः
मणिना वलयेन विभाति करः ।
कविना च विभुः विभुना च कविः
कविना विभुना च विभाति सभा ॥ ५८ ॥

शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः ॥ ५९ ॥

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥६०॥

गुणी गुणं वेत्ति न वेत्ति निर्गुणः
बली बलं वेत्ति न वेत्ति दुर्बलः ।
पिको वसंतस्य गुणं न वायसः
करी च सिंहस्य बलं न मूषकः ॥ ६१ ॥

यो न संचरते देशान् यो न सेवेत पण्डितान् ।
तस्य संकुचिता बुद्धि घृतबिन्दुरिवांभसि ॥ ६२ ॥

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ६३ ॥

कृतस्य करणं नास्ति मृतस्य मरणं तथा ।
गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ६४ ॥

वनेऽपि सिंहाः मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥६५॥

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाप्नुयात् ॥६६॥